# ॥ राधाकृष्णयुगलस्तुतिः ॥

श्रीब्रह्मोवाच -
अनादिमाद्यं पुरुषोत्तमोत्तमं श्रीकृष्णचन्द्रं निजभक्तवत्सलम् ।
स्वयं त्वसङ्ख्याण्डपतिं परात्परं राधापतिं त्वां शरणं व्रजाम्यहम् ॥ १॥

गोलोकनाथस्त्वमतीव लीलो लीलावतीयं निजलोकलीला ।
वैकुण्ठनाथोऽसि यदा त्वमेव लक्ष्मीस्तदेयं वृषभानुजा हि ॥ २॥

त्वं रामचन्द्रो जनकात्मजेयं भूमौ हरिस्त्वं कमलालयेयम् ।
यज्ञावतारोऽसि यदा तदेयं श्रीदक्षिणा स्त्री प्रतिपत्निमुख्या ॥ ३॥

त्वं नारसिंहोऽसि रमा तदेयं नारायणस्त्वं च नरेण युक्तः ।
तदा त्वियं शान्तिरतीव साक्षाच्छायेव याता च तवानुरूपा ॥ ४॥

त्वं ब्रह्म चेयं प्रकृतिस्तटस्था कालो यदेमां च विदुः प्रधानाम् ।
महान्यदा त्वं जगदङ्कुरोऽसि राधा तदेयं सगुणा च माया ॥ ५॥

यदान्तरात्मा विदितश्चतुर्भिस्तदा त्वियं लक्षणरूपवृत्तिः ।
यदा विराड्देहधरस्त्वमेव तदाखिलं वा भुवि धारणेयम् ॥ ६॥

श्यामं च गौरं विदितं द्विधा महस्तवैव साक्षात्पुरुषोत्तमोत्तम ।
गोलोकधामाधिपतिं परेशं परात्परं त्वां शरणं व्रजाम्यहम् ॥ ७॥

सदा पठेद्यो युगलस्तवं परं गोलोकधामप्रवरं प्रयाति सः ।
इहैव सौन्दर्यसमृद्धिसिद्धयो भवन्ति तस्यापि निसर्गतः पुनः ॥ ८॥

इति गर्गसंहितायां गोलोकखण्डे षोडशाध्यायान्तर्गता
ब्रह्मणा कृता राधाकृष्णयुगलस्तुतिः समाप्ता ।